ॐ

कलशपूजोपयोगि

# ऋचकम्

अत्र संस्कर्ता गणेशघाट्टवास्तव्यः कल्लेत्युपाह्वः
पण्डित नाथराम शास्त्री

मुद्रापकः
पण्डित काशीनाथ चरागी महावीर बाज़ार
हबा कदल श्रीनगर
शाकाब्दः १८६१ संवत् १९९६
मूल्यम् आना २/=

Durga Press, Srinagar.

ॐ

# श्रीगणेशायनमः ॥

ॐकारो यस्य मूलं क्रमपदजठरं छन्दविस्तीर्णशाखा ऋक्पत्रं सामपुष्पं यजुरुचितफलं स्यादथर्वा प्रतिष्ठा । यज्ञश्छाया सुश्वेतै-र्द्विजगणमधुपैर्गीयते यस्य नित्यं शक्तिः सन्ध्या त्रिकालं दुरित-भयहरः पातु नो वेदवृक्षः ॥

सच्छायः स्थिरधर्ममूलवलयः पुण्यालवालान्वितो धीविद्या-करुणाक्षमादिविलसद्विस्तीर्णशाखाश्रितः । सन्तोषोज्ज्वलपल्लवः शुचियशःपुष्पः सदा सत्फलः सर्वाशापरिपूरको विजयते श्रीवे-दकल्पद्रुमः ॥

मूलाधाराद्रुतवह्नकलामिश्रितं भूर्भुवःस्वर्ब्रह्मस्थानात्परमग-
हनात्तत्सवितुर्वरेण्यम् । भर्गो देवः शशिकलमयी धीमहीत्येकरूपं
धियो यो नः पिव तदमृतं चोदयान्नः परंतत् ॥

मुक्ताविद्रुमहेमनीलधवलच्छायैर्मुखैस्त्रीक्षणैर्यु-
क्तामिन्दुनिबद्धरत्नमुकुटां तत्त्वात्मवर्णात्मिकाम् ।
गायत्रीं वरदाभयांकुशकरां शूलं कपालं गुणं
शङ्खं चक्रमथारविन्दयुगलं हस्तैर्वहन्तीं भजे ॥

आयातु वरदा देवी त्र्यक्षरा ब्रह्मवादिनी ।
गायत्रि च्छन्दसां मातर्ब्रह्मयोने नमोस्तु ते ॥

---

॥ ऋचकम् ॥

ओजोऽसीति गायत्रीमावाह्य
देवानामार्षम् ॥

ओजोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धाम नामा-
सि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः ॐ भूः ॐ भुवः
ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं ॐ तत्सवितुर्वरेण्यं
भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ ॥

स्वस्त्यात्रेयः (विश्वेदेवाः) पांक्त्यन्तमग्रेः पञ्चोनाश्चतस्रो गाय-
त्र्यः षडुष्णिहश्चतस्रस्त्रिष्टुभोऽनुष्टुभौ बृहती च ॥

स्वस्ति नो मिमीतामश्विना भगः स्वस्ति देव्यदितिरनर्वणः ।
स्वस्ति पूषा असुरो दधातु नः स्वस्ति द्यावापृथिवी सुचेतना ॥
स्वस्तये वायुमुपब्रवामहै सोमं स्वस्ति भुवनस्य यस्पतिः । बृह-
स्पतिं सर्वगणं स्वस्तये स्वस्तय आदित्यासो भवन्तु नः ॥ विश्वे
देवा नो अद्या स्वस्तये वैश्वानरो वसुरग्निः स्वस्तये । देवा अव-
न्त्वृभवः स्वस्तये स्वस्ति नो रुद्रः पात्वंहसः ॥ स्वस्ति मित्रावरु-
णा स्वस्ति पथ्ये रेवति । स्वस्ति न इन्द्रश्चाग्निश्च स्वस्ति नो अ-
दिते कृधि ॥ स्वस्ति पन्थामनुचरेम सूर्याचन्द्रमसाविव । पुन-

ददता घ्नता जानता सङ्गमेमहि ॥ स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् ॥ असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवारुहेम ॥ अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् । प्रयतपाणिः शरणं प्रपद्ये स्वस्ति सम्बाधेष्वभयं नो अस्तु (कल्याणमस्तु) ॥

कनिक्रदत्तृचं प्रदक्षिणिज्ञागतं मध्येऽतिशकर्यपूर्विताभ्यामृषिरध्वनि वाशमानं शकुन्तं तुष्टाव कुशिकस्त्वैषीरथिरिन्द्रतुल्यं पुत्रमिच्छंस्तपस्तेपे तस्येन्द्र इव गाधीपुत्रो जज्ञे गाधिनो विश्वामित्रः स तृतीयं मण्डलमपश्यत् ॥

(कनिक्रददिति तृचं सूक्तं गृत्समदः शकुन्त इन्द्रस्त्रिष्टुप् ) ॥

कनिक्रदज्जनुषं प्रब्रुवाण इयर्ति वाचमरितेव नावम् । सुमङ्गलश्च शकुने भवासि मा त्वा कचिदभिभा विश्व्या विदत् ॥ मा त्वा श्येन उद्वधीन्मा सुपर्णो मा त्वा विददिषुमान्वीरो अस्ता । पित्र्यामनु प्रदिशं कनिक्रदत्सुमङ्गलो भद्रवादी वदेह ॥

अव क्रन्दन्दक्षिणतो गृहाणां सुमङ्गलो भद्रवादी शकुन्ते ।
मा नः स्तेन ईशत माघशंसो बृहद्वदेम विदथे सुवीराः ॥

(प्रदक्षिणिदिति तृचं सूक्तं गृत्समदः शकुन्तो जगती द्विती-
यातिशक्वर्यष्टिर्वा)

प्रदक्षिणिदभिगृणन्ति कारवो वयो वदन्त ऋतुथा शकुन्त-
यः । उभे वाचौ वदति सामगा इव गायत्रं च त्रैष्टुभं चानु
राजति ॥ उद्गातेव शकुने साम गायसि ब्रह्मपुत्र इव सवनेषु
शँससि । वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने । भद्रमा
वद विश्वतो नः शकुने पुण्यमा वद ॥ भद्रं वद दक्षिणतो भद्र-
मुत्तरतो वद । भद्रं पुरस्तान्नो वद भद्रं पश्चात्कपिञ्जल ॥ भद्रं वद
पुत्रैर्भद्रं वद गृहेषु च । भद्रमस्माकं वद भद्रं नो अभयं वद ॥ भद्र-
मधस्तान्नो वद भद्रमुपरिष्टान्नो वद । भद्रं भद्रन्न आवद भद्रं नः
सर्वतो वद ॥ असपत्नं पुरस्तान्नः शिवं दक्षिणतस्कृधि । अभयं
सततं पश्चाद्भद्रमुत्तरतो गृहे ॥ यौवनानि महयसि जिग्युषामिव

दुन्दुभिः । शकुन्तक प्रदक्षिणं शतपत्राभि नो वद ॥ आवदँस्त्वं शकुने भद्रमावद तूष्णीमासीनः सुमतिं चिकिद्धि नः । यदुत्पतन्वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ॥

ऐन्द्रवायव्ये ( वैश्वदेवाः सारस्वताः ) द्यावापृथिव्यावन्त्यस्तृचो हविर्धाने वा तस्य तृतीयः पादो वाग्नेयोऽम्बितमे द्वेऽनुष्टुभौ बृहत्यष्टमी शेषं गायत्रम् ॥

इन्द्रश्च मृळयाति नो न नः पश्चादघं नशत् । भद्रं भवाति नः पुरः ॥ इन्द्र आशाभ्यस्परि सर्वाभ्यो अभयं करत् । जेता शत्रून्विचर्षणिः ॥ विश्वेदेवास आगत शृणुता म इमं हवम् । इदं बर्हिर्निषीदत ॥ तीव्रो वो मधुमाँ अयं शुनहोत्रेषु मत्सरः । एतं पिवत काम्यम् ॥ इन्द्रज्येष्ठा मरुद्गणा देवासः पूषरातयः । विश्वे मम श्रुता हवम् ॥ अम्बितमे नदीतमे देवितमे सरस्वति । अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥ त्वे विश्वा सरस्वति श्रितायूँषि देव्याम् । शुनहोत्रेषु मत्स्व प्रजां देवि दिदिड्ढि नः ॥

इमा ब्रह्म सरस्वति जुषस्व वाजिनीवति । या ते मन्म गृत्समदा ऋतावरि प्रिया देवेषु जुह्वति ॥ प्रेतां यज्ञस्य शम्भुवा युवामिदा वृणीमहे । अग्निं च हव्यवाहनम् ॥ द्यावा नः पृथिवी इमं सिध्रमद्य दिविस्पृशम् । यज्ञं देवेषु यच्छताम् ॥ आ वामुपस्थमद्रुहा देवाः सीदन्तु यज्ञियाः । इहाद्य सोमपीतये ॥

आ नो दश (गौतमो) वैश्वदेवन्तु द्वि त्रिष्टुवन्तमाद्यास्तृचाः पञ्चमी सप्तमी जगत्यः षष्ठी विरट्स्थाना ॥

आ नो भद्राः ऋतवो यन्तु विश्वतोऽदब्धासो अपरीतास उद्भिदः । देवा नो यथा सदमिद्वृधे असन्नप्रायुवो रक्षितारो दिवे दिवे ॥ देवानां भद्रा सुमतिर्ऋजूयतां देवानां रातिरभि नो नि वर्त्तताम् । देवानां सख्यमुप सेदिमा वयं देवा न आयुः प्रतिरन्तु जीवसे ॥ तान्पूर्वया निविदा हूमहे वयं भगं मित्रमदितिं दक्षमस्रिधम् । अर्यमणं वरुणं सोममश्विना सरस्वती नः सुभ-

गा मयस्करत् ॥ तन्नो वातो मयोभु वातु भेषजं तन्माता पृथि-
वी तत्पिता द्यौः । तद्ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृ-
णुतं धिष्ण्या युवम् ॥ तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्व-
मवसे हूमहे वयम् । पूषा नो यथा वेदसामसद्वृधे रक्षिता पा-
युरदब्धः स्वस्तये ॥ स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा
विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्द-
धातु ॥ पृषदश्वा मरुतः पृश्निमातरः शुभंयावनो विदथेषु जग्म-
यः । अग्निजिह्वा मनवः सूरचक्षसो विश्वे नो देवा अवसा गमन्निह ॥
भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरै-
रङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः ॥ शतमिन्नु शरदो
अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भ-
वन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ अदितिर्द्यौरदितिरन्तरि-
क्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः पञ्च जना
अदितिर्जातमदितिर्जनित्वम् ॥

अग्निर्वायुश्च सूर्यश्च वरुणः साम एवच ।
ब्रह्म राज्ञे रथश्चैवमित्यष्टावग्निभद्रकम् ॥

अग्नये समनमत्पृथिव्यै समनमद्यथाग्निः पृथिव्या समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ वायवे समनमदन्तरिक्षाय समनमद्यथा वायुरन्तरिक्षेण समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ सूर्याय समनमद्दिवे समनमद्यथा सूर्यो दिवा समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ वरुणाय समनमदद्भ्यः समनमद्यथा वरुणोऽद्भिः समनमदेवं मह्यं भद्राः संनतयः संनमन्तु साम्ने समनमदृचे समनमद्यथा सामर्चा समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ ब्रह्मणे समनमत्क्षत्राय समनमद्यथा ब्रह्मक्षत्रेण समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ राज्ञे समनमद्विशे समनमद्यथा राजा विशा समनमदेवं मह्यं भद्राः संनतयः संनमन्तु ॥ रथाय समनमदश्वेभ्यः समनमद्यथा रथोऽश्वैः समनमदेवं मह्यं भद्राः संमनतयः संनमन्तु ॥

भद्रो नो अग्निः सुहवो विभावसुर्भद्र इन्द्रः पुरुहूतः पुरुष्टुतः ।
भद्रः सूर्य उरुचक्षा उरूयचा भद्रश्चन्द्रमाः सँमिथेषु जागृविः ॥
भद्रः प्रजा अजनयन्नः प्रजापतिर्भद्रः सोमः पवमानो वृषा हरिः
भद्रस्त्वष्टा विदधद्रूपाण्यद्भुतो भद्रो नो धाता वरिवस्यतु प्रजाः ॥
भद्रस्तार्क्ष्यः सुप्रजस्त्वाय नो महानरिष्टनेमिः पृतना युधा जयन् ।
भद्रो वायुर्मातरिश्वा नियुत्पतिर्वेनो गयस्फान उशन्सदास्तु नः ॥
भद्रो मित्रो वरुणो रुद्र इद्वृधा भद्रोऽहिर्बुध्न्यो भुवनस्य रक्षिता ।
भद्रो नो वास्तोष्पतिरस्त्वमीवहा भद्रः क्षेत्रस्य पतिर्विचर्षणिः ॥
भद्रो विभुर्विश्वकर्मा बृहस्पतिर्भद्रो द्विषस्तपनो ब्रह्मणस्पतिः । भद्रः
सुपर्णो अरुणो मरुत्सखा भद्रो नो वातो अभिवातु भेषजी ॥ भद्रो
दधिक्रा वृषभः कनिक्रदद्भद्रः पर्जन्यो बहुधा विराजति । भद्रः
सरस्वाँ उत नः सरस्वती भद्रोर्वशी भद्र इन्द्रः पुरूरवाः ॥ भद्रो
नः पूषा सविता यमो भगो भद्रोऽजएकपादर्यमा मनुः । भद्रो विष्णु-

रुरुगायो वृषा हरिर्भद्रो विवस्वाँअभिवातु नस्त्मना ॥ भद्रो गायत्री

ककुबुष्णिहा विराड्भद्रानुष्टुब्बृहती पङ्क्तिरस्तु नः। भद्रा नस्त्रि-
ष्टुब्जगती पुरुप्रिया भद्रातिच्छन्दा बहुधा विभूवरी ॥ भद्रा नो
राकानुमतिः कुहूः सुहृद्भद्रा सिनीवाल्यदितिर्मही ध्रुवा। भद्रा नो
द्यौरन्तरिक्षं मयस्करं भद्रोशोदक्षस्तनयाय नस्तुजे ॥ भद्रो नः प्राणः
सुमनाः सुवागसद्भद्रो अपानः सतनोस्सहात्मना। भद्रं चक्षुर्भद्र-
मिच्छ्रोत्रमस्तु नो भद्रन्न आयुश्शरदो असच्छताम् ॥ भद्रेन्द्राग्नी नो
भवतामृतावृधा भद्रा नो मित्रावरुणा धृतव्रता। भद्राश्विना नो भव-
तां नवेदसा भद्रा द्यावापृथिवी विश्वशम्भुवा॥ भद्रा न इन्द्रावरुणा-
रिषादसा भद्रा न इन्द्रा भवतां बृहस्पती। भद्रेन्द्राविष्णू सवनेष्व-
यावृधा भद्रेन्द्रासोमायुधि दस्युहन्तमा ॥ भद्राग्नाविष्णू विदथस्य
प्रसाधना भद्रा नोऽग्नीन्द्रा वृषभा दिवस्पती। भद्रा नो अग्नीवरुणा
प्रचेतसा भद्राग्नीषोमा भवता नवेदसा॥ भद्रा सूर्याचन्द्रमसा कवि-
क्रतू भद्रा सोमा भवतां पूषणा नः। भद्रेन्द्रावायू पृतनास्वसासही
भद्रा सूर्याग्नी अजिता धनञ्जया ॥ भद्रा नः सन्तु वसवो वसु-

प्रजा भद्रा रुद्रावृत्रहणा पुरन्धरा । भद्रा आदित्याः स्वपसः सुनीतयो भद्रा राजानो मरुतो विरप्शिनः ॥ भद्रा न ऊमाः सुहवाः शतश्रियो विश्वेदेवा मनवश्चर्षणीधृतः । भद्राः साध्या अभिभवः सूरचक्षसो भद्रा नः सन्त्वृभवो रत्नधातमा ॥ भद्राः सर्वे वाजिनो वाजसातयो भद्रा ऋषयः पितरो गभस्तयः । भद्रा भृगवोऽङ्गिरसः सुदानवो भद्रा गन्धर्वाप्सरसः सुदंससः ॥ भद्रा आपः शुचयो विश्वभृत्तमा भद्राः शिवा यक्ष्मनुदो न ओषधीः । भद्रा गावः सुरभयो वयोवृधो भद्रा योषा उशतीर्देवपत्नयः ॥ भद्राणि सामानि सदा भवन्तु नो भद्रा अथर्वाण ऋचो यजूंषि नः । भद्रा नक्षत्राणि शिवानि विश्वा भद्रा आशा अहुताः सन्तु नो हृदि ॥ संवत्सरा न ऋतवो मयोभुवो युवा आयुवाः सुसराण्युत क्षपाः । मुहूर्ताः काष्ठाः प्रदिशो दिशश्च सदा भद्राः सन्तु द्विपदे चतुष्पदे ॥ भद्रं पश्येम प्रचरेम भद्रं भद्रं वदेम शृणुयाम भद्रं । तन्नो मित्रो वरुणो मा महन्तामदितिः सिन्धुः पृथिवी उत द्यौः ॥

आग्नेय्यौ द्वे देवीनामेकेन्द्राणीवरुणान्यग्नाय्यीनां द्यावापृथिव्यौ पार्थिवी षड्वैष्णव्योऽन्तो देवा दैवी वा गायत्री ॥

अभि नो देवीरवसा महः शर्मणा नृपतीः । अच्छिन्नपत्राः सचन्ताम् ॥ इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये । अग्नायीं सोमपीतये ॥ मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः ॥ तयोरिद् घृतवत्पयो विप्रा रिहन्ति धीतिभिः । गन्धर्वस्य ध्रुवे पदे ॥ स्योना पृथिवी भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथः ॥ अतो देवा अवन्तु नो यतो विष्णुर्विचक्रमे । पृथिव्याः सप्तधामभिः ॥ इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् । समूढमस्य पांसुरे ॥ त्रीणि पदा वि चक्रमे विष्णुर्गोपा अदाभ्यः । अतो धर्माणि धारयन् ॥ विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पृशे । इन्द्रस्य युज्यः सखा ॥ तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विपण्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥

गायत्र्यै नमः ॐ भूर्भुवः स्वः तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ३ । अश्वमेधे घोराणामघर्षम् ॥

द्रष्ट्रे नम उप द्रष्ट्रे नमोऽनुद्रष्ट्रे नमः ख्यात्रे नम उपख्यात्रे नमोऽनुख्यात्रे नमः शृण्वते नम उपशृण्वते नमः सते नमोऽसते नमो जाताय नमो जनिष्यमाणाय नमो भूताय नमो भविष्यते नमश्चक्षुषे नमः श्रोत्राय नमो मनसे नमो वाचे नमो ब्रह्मणे नमः श्रान्ताय नमस्तपसे नमः ॥ भूतं भव्यं भविष्यद्वषट्स्वाहा नम ऋक्साम यजुर्वषट्स्वाहा नमो गायत्री त्रिष्टुब्जगती वषट्स्वाहा नमः पृथिव्यन्तरिक्षं द्यौर्वषट्स्वाहा नमोऽन्नं कृषिर्वृष्टिर्वषट्स्वाहा नमः पिता पुत्रः पौत्रो वषट्स्वाहा नमः प्राणो व्यानोऽपानो वषट्स्वाहा नमो भूर्भुवः स्वर्वषट् स्वाहा नमः ॥

यो विश्वचक्षुरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात् । सम्बाहुभ्यां नमते संय्यजत्रैर्द्यावापृथिवी जनयन्देव एकः ॥ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्चसी जायतामस्मिन्राष्ट्रे राजन्य

भगवते तुभ्यमादित्याय नमो नमः ॥ श्रीसूर्यनारायणप्रीत्यर्थे जपे विनियोगः ॥ ॥ अथ न्यासः ॥ ॥ ॐ ह्रां अंगुष्ठाभ्यां नमः ॥ ॐ ह्रीं तर्जनीभ्यां नमः ॥ ॐ ह्रूं मध्यमाभ्यां नमः ॥ ॐ ह्रैं अनामिकाभ्यां नमः ॥ ॐ ह्रौं कनिष्ठिकाभ्यां नमः ॥ ॐ ह्रः करतलकरपृष्ठाभ्यां नमः ॥ ॐ ह्रां हृदयाय नमः ॥ ॐ ह्रीं शिरसे स्वाहा ॥ ॐ ह्रूं शिखायै वषट् ॥ ॐ ह्रैं कवचाय हुम् ॥ ॐ ह्रौं नेत्रत्रयाय वौषट् ॥ ॐ ह्रः अस्त्राय फट् ॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः इति दिग्बंधः ॥ अथ ध्यानम् ॥ ॥

भास्वद्रत्नाढ्यमौलिः स्फुरदधररुचा रंजितश्चारुकेशो भास्वान्वै दिव्यतेजाः करकमलयुतः स्वर्णवर्णः प्रभाभिः ॥ विश्वाकाशावकाशग्रहपतिशिखरे भाति यश्चोदयाद्रौ सर्वानंदप्रदाता हरिहरनमितः पातु मां विश्वचक्षुः ॥१॥ सूर्यमण्डलं मध्यं प्रणवादिमति-

ष्ठितम् ॥ मायाबीजं दलाष्टाग्रे यंत्रमुद्धारयेदिति ॥ २ ॥ आदित्यं भास्करं भानुं रविं सूर्यं दिवाकरम् ॥ मार्तंडं तपनं चेति दलेष्व-ष्टसु योजयेत् ॥ ३ ॥ दीप्ता सूक्ष्मा जया भद्रा विभूतिर्विमला तथा ॥ अमोघा विद्युता चेति मध्ये श्रीः सर्वतोमुखी ॥ ४ ॥ सर्वज्ञः सर्वगश्चैव सर्वकारणदेवता ॥ सर्वेशं सर्वहृदयं नमामि सर्वसाक्षिणम् ॥५॥ सर्वात्मा सर्वकर्ता च सृष्टिजीवनपालकः ॥ हितः स्वर्गापवर्गश्च भास्करेश नमोऽस्तु ते ॥ ६ ॥ ॥ इति प्रार्थ-ना ॥ ॥ नमो नमस्तेऽस्तु सदा विभावसो सर्वात्मने सप्तहयाय भानवे ॥ अनंतशक्ते मणिभूषणेन ददस्व भुक्तिं मम मुक्तिम-व्ययाम् ॥७॥ अर्कं तु मूर्ध्नि विन्यस्य ललाटे तु रविं न्यसेत् ॥ विन्यसेन्नेत्रयोः सूर्यं कर्णयोश्च दिवाकरम् ॥ ८ ॥ नासिकायां न्यसेद्भानुं मुखे वै भास्करं न्यसेत् ॥ पर्जन्यमोष्ठयोश्चैव तीक्ष्णं

जिह्वांतरे न्यसेत् ॥ ९ ॥ सुवर्णरेतसं कंठे स्कंधयोस्तिग्मतेजसम् ॥ बाह्वोस्तु पूषणं चैव मित्रं वै पृष्ठतो न्यसेत् ॥१०॥ वरुणं दक्षिणे हस्ते त्वष्टारं वामतः करे ॥ हस्तावुष्णकरः पातु हृदयं पातु भानुमान् ॥ ११ ॥ उदरे तु यमं विद्यादादित्यं नाभिमंडले ॥ कट्यां तु विन्यसेद्धंसं रुद्रमूर्वोस्तु विन्यसेत् ॥ १२ ॥ जान्वोस्तु गोपतिं न्यस्य सवितारं तु जंघयोः ॥ पादयोश्च विवस्वंतं गुल्फयोश्च दिवाकरम् ॥१३॥ बाह्यतस्तु तमोध्वंसं भगमभ्यन्तरे न्यसेत् ॥ सर्वांगेषु सहस्रांशुं दिग्विदिक्षु भगं न्यसेत् ॥ १४ ॥ इति दिग्बंधः ॥ एष आदित्यविन्यासो देवानामपि दुर्लभः ॥ इमं भक्त्या न्यसेत्पार्थ स याति परमां गतिम् ॥१५॥ कामक्रोधकृतात्पापान्मुच्यते नात्र संशयः ॥ सर्पादपि भयं नैव संग्रामेषु पथिष्वपि ॥ १६ ॥ रिपुसंकटकालेषु तथा चोरसमागमे ॥

त्रिसंध्यं जपतो न्यासं महापातकनाशनम् ॥१७॥ विस्फोटकसमुत्पन्नं तीव्रज्वरसमुद्भवम् ॥ शिरोरोगं नेत्ररोगं सर्वव्याधिविनाशनम् ॥१८॥ कुष्ठव्याधिस्तथा दद्रू रोगाश्च विविधाश्च ये ॥ जपमानस्य नश्यन्ति शृणु भक्त्या तदर्जुन॥१९॥आदित्यो मंत्रसंयुक्त आदित्यो भुवनेश्वरः॥आदित्यान्नापरो देवो ह्यादित्यः परमेश्वरः ॥ २० ॥ आदित्यमर्चयेद्ब्रह्मा शिव आदित्यमर्चयेत् ॥ यदादित्यमयं तेजो मम तेजस्तदर्जुन ॥ २१ ॥ आदित्यं मंत्रसंयुक्तमादित्यं भुवनेश्वरम् ॥ आदित्यं ये प्रपश्यंति मां पश्यंति न संशयः ॥ २२ ॥ त्रिसंध्यमर्चयेत्सूर्यं स्मरेद्भक्त्या तु यो नरः ॥ न स पश्यति दारिद्र्यं जन्मजन्मनि चार्जुन ॥ २३ ॥ एतत्ते कथितं पार्थ आदित्यहृदयं मया ॥ मुच्यते सर्वपापेभ्यः सूर्यलोके महीयते ॥ २४ ॥ नमो भगवते तुभ्यमादित्याय नमो

नमो नमः सहस्रांशो ह्यादित्याय नमो नमः ॥ नमः पद्मप्रबो-
धाय नमस्ते द्वादशात्मने ॥ ४१ ॥ नमो विश्वप्रबोधाय नमो
भ्राजिष्णुजिष्णवे ॥ ज्योतिषे च नमस्तुभ्यं ज्ञानार्काय नमो
नमः ॥ ४२ ॥ प्रदीप्ताय प्रगल्भाय युगांताय नमो नमः ॥
नमस्ते होतृपतये पृथिवीपतये नमः ॥४३॥ नमोंकार वषट्कार
सर्वयज्ञ नमोऽस्तु ते ॥ ऋग्वेदादिर्यजुर्वेद सामवेद नमोऽस्तु
ते ॥ ४४ ॥ नमो हाटकवर्णाय भास्कराय नमो नमः ॥ जया-
य जयभद्राय हरिदश्वाय ते नमः ॥ ४५ ॥ दिव्याय दिव्यरू-
पाय ग्रहाणां पतये नमः ॥ नमस्ते शुचये नित्यं नमः कुरुकु-
लात्मने ॥४६॥ नमस्त्रैलोक्यनाथाय भूतानां पतये नमः ॥ नमः
कैवल्यनाथाय नमस्ते दिव्यचक्षुषे ॥४७॥ त्वं ज्योतिस्त्वं द्युति-
र्ब्रह्मा त्वं विष्णुस्त्वं प्रजापतिः ॥ त्वमेव रुद्रो रुद्रात्मा वायुर-

मंडली भास्वान् तपनः सर्वतापनः ॥ कृतविश्वो महातेजाः सर्व-
रत्नमयोद्भवः ॥ ३३ ॥ अक्षरश्च क्षरश्चैव प्रभाकरविभाकरौ ॥
चंद्रश्चंद्रांगदः सौम्यो हव्यकव्यप्रदायकः ॥३४॥ अंगारकोऽग-
दो हस्ती रक्तांगश्चांगवर्धनः ॥ बुधो बुद्धासनो बुद्धिर्बुद्धात्मा
बुद्धिवर्धनः ॥ ३५ ॥ बृहद्भानुर्बृहद्भासो बृहद्धामा बृहस्पतिः ॥
शुक्रस्त्वं शुक्ररेतास्त्वं शुक्रांगः शुक्रभूषणः ॥ ३६ ॥ शनिमां-
श्छनिरूपस्त्वं शनैर्गच्छसि सर्वदा ॥ अनादिरादिरादित्यस्तेजो-
राशिर्महातपाः ॥ ३७ ॥ अनादिरादिरूपस्त्वमादित्यो दिक्प-
तिर्यमः ॥ भानुमान्भानुरूपस्त्वं स्वर्भानुर्भानुदीप्तिमान् ॥३८॥
धूमकेतुर्महाकेतुः सर्वकेतुरनुत्तमः ॥ तिमिरावरणः शंभुः स्रष्टा
मार्तंड एव च ॥ ३९ ॥ नमः पूर्वाय गिरये पश्चिमाय नमो
नमः ॥ नमोत्तराय गिरये दक्षिणाय नमो नमः ॥ ४० ॥

नमो नमः सहस्रांशो ह्यादित्याय नमो नमः ॥ नमः पद्मप्रबो-
धाय नमस्ते द्वादशात्मने ॥ ४१ ॥ नमो विश्वप्रबोधाय नमो
भ्राजिष्णुजिष्णवे ॥ ज्योतिषे च नमस्तुभ्यं ज्ञानार्काय नमो
नमः ॥ ४२ ॥ प्रदीप्ताय प्रगल्भाय युगांताय नमो नमः ॥
नमस्ते होतृपतये पृथिवीपतये नमः ॥४३॥ नमोंकार वषट्कार
सर्वयज्ञ नमोऽस्तु ते ॥ ऋग्वेदादिर्यजुर्वेद सामवेद नमोऽस्तु
ते ॥ ४४ ॥ नमो हाटकवर्णाय भास्कराय नमो नमः ॥ जया-
य जयभद्राय हरिदश्वाय ते नमः ॥ ४५ ॥ दिव्याय दिव्यरू-
पाय ग्रहाणां पतये नमः ॥ नमस्ते शुचये नित्यं नमः कुरुकु-
लात्मने ॥४६॥ नमस्त्रैलोक्यनाथाय भूतानां पतये नमः ॥ नमः
कैवल्यनाथाय नमस्ते दिव्यचक्षुषे ॥४७॥ त्वं ज्योतिस्त्वं द्युति-
र्ब्रह्मा त्वं विष्णुस्त्वं प्रजापतिः ॥ त्वमेव रुद्रो रुद्रात्मा वायुर-

ग्निस्त्विमेव च ॥४८॥ योजनानां सहस्रे द्वे द्वे शते द्वे च योजने ॥ एकेन निमिषार्धेन क्रममाण नमोऽस्तु ते ॥ ४९ ॥ नवयोजन-लक्षाणि सहस्रद्विशतानि च ॥ यावद्द्वीप्रमाणेन क्रममाण नमोऽस्तु ते ॥५०॥ अग्रतश्च नमस्तुभ्यं पृष्ठतश्च सदा नमः ॥ पार्श्वतश्च नमस्तुभ्यं नमस्ते चास्तु सर्वदा ॥५१॥ नमः सुरारि-हंत्रे च सोमसूर्याग्निचक्षुषे ॥ नमो दिव्याय व्योमाय सर्वतंत्रम-याय च ॥५२॥ नमो वेदांतवेद्याय सर्वकर्मादिसाक्षिणे ॥ नमो हरितवर्णाय सुवर्णाय नमो नमः ॥५३॥ अरुणो माघमासे तु सूर्यो वै फाल्गुने तथा ॥ चैत्रमासे तु वेदांगो भानुर्वैशाखतापनः ॥५४॥ ज्येष्ठमासे तपेदिंद्र आषाढे तपते रविः ॥ गभस्तिः श्रा-वणे मासे यमो भाद्रपदे तथा ॥५५॥ इषे सुवर्णरेताश्च कार्तिके च दिवाकरः ॥ मार्गशीर्षे तपेन्मित्रः पौषे विष्णुः सनातनः

॥ ५६ ॥ पुरुषस्त्वधिके मासे मासाधिक्येषु कल्पयेत् ॥ इत्येते द्वादशादित्याः काश्यपेयाः प्रकीर्तिताः ॥५७॥ उग्ररूपा महात्मानस्तपंते विश्वरूपिणः ॥ धर्मार्थकाममोक्षाणां प्रस्फुटा हेतवो नृप ॥ ५८ ॥ सर्वपापहरं चैवमादित्यं संप्रपूजयेत् ॥ एकधा दशधा चैव शतधा च सहस्रधा ॥५९॥ तपंते विश्वरूपेण सृजंति संहरंति च ॥ एष विष्णुः शिवश्चैव ब्रह्मा चैव प्रजापतिः ॥६०॥ महेंद्रश्चैव कालश्च यमो वरुण एव च ॥ नक्षत्रग्रहताराणामधिपो विश्वतापनः ॥६१॥ वायुरग्निर्धनाध्यक्षो भूतकर्ता स्वयंप्रभुः ॥ एष देवो हि देवानां सर्वमाप्यायते जगत् ॥६२॥ एष कर्ता हि भूतानां संहर्ता रक्षकस्तथा ॥ एष लोकानुलोकश्च सप्तद्वीपाश्च सागराः ॥६३॥ एष पातालसप्तस्थो दैत्यदानवराक्षसाः ॥ एष धाता विधाता च बीजं क्षेत्रं प्रजापतिः ॥६४॥ एष एव प्रजा नित्यं संवर्ध-

यति रश्मिभिः ॥ एष यज्ञः स्वधा स्वाहा ह्रीः श्रीश्च पुरुषोत्तमः
॥६५॥ एष भूतात्मको देवः सूक्ष्मोऽव्यक्तः सनातनः॥ईश्वरः सर्व-
भूतानां परमेष्ठी प्रजापतिः॥६६॥ कालात्मा सर्वभूतात्मा वेदात्मा
विश्वतोमुखः ॥ जन्ममृत्युराव्याधिसंसारभयनाशनः ॥६७॥
दारिद्र्यव्यसनध्वंसी श्रीमान्देवो दिवाकरः ॥ विकर्तनो विव-
स्वांश्च मार्तंडो भास्करो रविः ॥६८॥ लोकप्रकाशकः श्रीमाँल्लो-
कचक्षुर्ग्रहेश्वरः ॥ लोकसाक्षी त्रिलोकेशः कर्ता हर्ता तमिस्रहा
॥६९॥ तपनस्तापनश्चैव शुचिः सप्ताश्ववाहनः ॥ गभस्तिहस्तो
ब्रह्मण्यः सर्वदेवनमस्कृतः ॥ ७० ॥ आयुरारोग्यमैश्वर्यं नरा
नार्यश्च मंदिरे ॥ यस्य प्रसादात्संतुष्टिरादित्यहृदयं जपेत् ॥७१॥
इत्येतैर्नामभिः पार्थ आदित्यं स्तौति नित्यशः ॥ प्रातरुत्थाय
कौंतेय तस्य रोगभयं नहि ॥ ७२ ॥ पातकान्मुच्यते पार्थ

व्याधिभ्यश्च न संशयः ॥ एकसंध्यं द्विसंध्यं वा सर्वपापैः
प्रमुच्यते ॥ ७३ ॥ त्रिसंध्यं जपमानस्तु पश्येच्च परमं पदम् ॥
यदह्ना कुरुते पापं तदह्ना प्रतिमुच्यते ॥ ७४ ॥ यदात्र्या कुरुते
पापं तद्रात्र्या प्रतिमुच्यते ॥ दद्रुस्फोटककुष्ठानि मंडलानि विषू-
चिका ॥७५॥ सर्वव्याधिमहारोगभूतबाधास्तथैव च ॥ डाकिनी
शाकिनी चैव महारोगभयं कुतः ॥७६॥ ये चान्ये दुष्टरोगाश्च
ज्वरातीसारकादयः ॥ जपमानस्य नश्यंति जीवेच्च शरदां
शतम् ॥ ७७ ॥ संवत्सरेण मरणं यदा तस्य ध्रुवं भवेत् ॥
अशीर्षां पश्यति छायामहोरात्रं धनंजय ॥ ७८ ॥ यस्त्विदं
पठते भक्त्या भानोर्वारे महात्मनः ॥ प्रातःस्नाने कृते पार्थ
एकाग्रकृतमानसः ॥ ७९ ॥ सुवर्णचक्षुर्भवति न चांधस्तु प्रजा-
यते ॥ पुत्रवान् धनसंपन्नो जायते चारुजः सुखी ॥ ८० ॥

सर्वसिद्धिमवाप्नोति सर्वत्र विजयी भवेत् ॥ आदित्यहृदयं पुण्यं सूर्यनामविभूषितम् ॥ ८१ ॥ श्रुत्वा च निखिलं पार्थ सर्वपापैः प्रमुच्यते ॥ अतःपरतरं नास्ति सिद्धिकामस्य पांडव ॥ ८२ ॥ एतज्जपस्व कौंतेय येन श्रेयो ह्यवाप्स्यसि ॥ आदित्यहृदयं नित्यं यः पठेत्सुसमाहितः ॥ ८३ ॥ भ्रूणहा मुच्यते पापात्कृतघ्नो ब्रह्मघातकः ॥ गोघ्नः सुरापो दुर्भोजी दुष्प्रतिग्रहकारकः ॥८४॥ पातकानि च सर्वाणि दहत्येव न संशयः ॥ य इदं शृणुयान्नित्यं जपेद्वापि समाहितः ॥ ८५ ॥ सर्वपापविशुद्धात्मा सूर्यलोके महीयते ॥ अपुत्रो लभते पुत्रान्निर्धनो धनमाप्नुयात् ॥ ८६ ॥ कुरोगी मुच्यते रोगाद्भक्त्या यः पठते सदा ॥ यस्त्वादित्यदिने पार्थ नाभिमात्रजले स्थितः ॥ ८७ ॥ उदयाचलमारूढं भास्करं प्रणतः स्थितः ॥ जपते मानवो भक्त्या शृणुयाद्वापि भक्तितः

॥८८॥ स याति परमं स्थानं यत्र देवो दिवाकरः ॥ अमित्रदमनं पार्थ यदा कर्तुं समारभेत्॥८९॥सम्यक् प्रतिकृतिं कृत्वा शत्रोश्च-रणपांसुभिः॥ आक्रम्य वामपादेन आदित्यहृदयं जपेत्॥९०॥ एतन्मंत्रं समाहूय सर्वसिद्धिकरं परम्॥ ॐ ह्रीं हिमालीढं स्वाहा॥ ॐ ह्रीं निलीढं स्वाहा ॥ ॐ ह्रीं मालीढं स्वाहा ॥ इति मंत्रः॥ त्रिभिश्च रोगी भवति ज्वरी भवति पंचभिः॥ जपेस्तु सप्तभिः पार्थ राक्षसीं तनुमाविशेत् ॥९१॥ राक्षसेनाभिभूतस्य विकारान् शृणु पांडव ॥ गायते नृत्यते नग्न आस्फोटयति धावति ॥९२॥ शिवारुतं च कुरुते हसते क्रंदते पुनः ॥ एवं संपीड्यते पार्थ यद्यपि स्यान्महेश्वरः ॥९३॥ किं पुनर्मानुषः कश्चिच्छौचाचारविवर्जितः ॥ पीडितस्य न संदेहो ज्वरो भवति दारुणः ॥९४॥ यदा चानुग्रहं तस्य कर्तुमिच्छेच्छुभंकरम् ॥ तदा सलिलमादाय जपे-

आ. न्मंत्रमिमं बुधः ॥ ९५ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः ॥ जयाय जयभद्राय हरिदश्वाय ते नमः ॥ ९६ ॥ स्नापये- त्तेन मंत्रेण शुभं भवति नान्यथा ॥ अन्यथा च भवेदेष नश्यते नात्र संशयः ॥९७॥ स्तवस्ते निखिलः प्रोक्तः पूजां चैव निबोध मे ॥ उपलिप्ते शुचौ देशे नियतो वाग्यतः शुचिः॥९८॥ वृत्तं वा चतुरस्रं वा लिप्तभूमौ लिखेच्छुचिः ॥ त्रिधा तत्र लिखेत्प- द्ममष्टपत्रं सकर्णिकम् ॥ ९९ ॥ अष्टपत्रं लिखेत्पद्मं लिप्तगोमयमं- डले ॥ पूर्वपत्रे लिखेत्सूर्यमाग्नेये तु रविं न्यसेत् ॥१००॥ या- म्यायां च विवस्वंतं नैर्ऋत्यां तु भगं न्यसेत् ॥ प्रतीच्यां वरुणं विद्याद्वायव्यां मित्रमेव च ॥ १ ॥ आदित्यमुत्तरे पत्रे ईशान्यां विष्णुमेव ॥ मध्ये तु भास्करं विद्यात्क्रमेणैवं समर्चयेत् ॥२॥ अतः परतरं नास्ति सिद्धिकामस्य पांडव ॥ महातेजः समुद्यंतं

हृद. १० १०

प्रणमेत्स कृतांजलिः ॥ ३ ॥ सकेसराणि पद्मानि करवीराणि चार्जुन ॥ तिलतंडुलसंयुक्तकुशगंधोदकेन च ॥४॥ रक्तचंदनमिश्राणि कृत्वा वै ताम्रभाजने ॥ धृत्वा शिरसि तत्पात्रं जानुभ्यां धरणिं स्पृशेत् ॥ ५ ॥ मंत्रपूतं गुडाकेश चार्घ्यं दद्याद्गभस्तये ॥ सायुधं सरथं चैव सूर्यमावाहयाम्यहम् ॥ ६ ॥ स्वागतो भव ॥ सुप्रतिष्ठितो भव ॥ सन्निधौ भव ॥ सन्निहितो भव ॥ संमुखो भव इति पंचमुद्राः ॥ ॥ स्फुटयित्वार्हयेत्सूर्यं भुक्तिं मुक्तिं लभेन्नरः ॥७॥ ॐ श्रीं विद्यां किलिकिलिकटकेष्टसर्वार्थसाधनाय स्वाहा ॥ ॐ श्रीं ह्रीं हः हंसः सूर्याय नमः स्वाहा ॥ ॐश्रीं ह्रांह्रींह्रूंह्रैंह्रौंह्रः सूर्यमूर्तये स्वाहा ॥ ॐ श्रींह्रींखंखः लोकाय सर्वमूर्तये स्वाहा ॥ ॐ ह्रूं मार्तंडाय स्वाहा ॥ नमोऽस्तु सूर्याय सहस्रभानवे नमोऽस्तु वैश्वानर जातवेदसे ॥ त्वमेव

चार्घ्यं प्रतिगृह्ण देव देवाधिदेवाय नमो नमस्ते ॥ ८ ॥ नमो भगवते तुभ्यं नमस्ते जातवेदसे ॥ दत्तमर्घ्यं मया भानो त्वं गृहाण नमोऽस्तु ते ॥ ९ ॥ एहि सूर्य सहस्रांशो तेजोराशे जगत्पते ॥ अनुकंपय मां देव गृहाणार्घ्यं नमोस्तु ते ॥१०॥ नमो भगवते तुभ्यं नमस्ते जातवेदसे ॥ ममेदमर्घ्यं गृह्ण त्वं देवदेव नमोस्तु ते ॥११॥ सर्वदेवाधिदेवाय आधिव्याधिविनाशिने ॥ इदं गृहाण मे देव सर्वव्याधिर्विनश्यतु ॥ १२ ॥ नमः सूर्याय शांताय सर्वरोगविनाशिने ॥ ममेप्सितं फलं दत्वा प्रसीद परमेश्वर ॥ १३ ॥ ॐनमो भगवते सूर्याय स्वाहा ॥ ॐशिवाय स्वाहा ॥ ॐसर्वात्मने सूर्याय नमः स्वाहा ॥ ॐअक्षय्यतेजसे नमः स्वाहा ॥ सर्वसंकटदारिद्र्यं शत्रुं नाशय नाशय ॥ सर्वलोकेषु विश्वात्मा सर्वात्मा सर्वदर्शकः ॥ १४ ॥ नमो भगवते

सूर्य कुष्ठरोगान् विखंडय ॥ आयुरारोग्यमैश्वर्यं देहि देव नमो-
स्तु ते ॥ १५ ॥ नमो भगवते तुभ्यमादित्याय नमो नमः ॥
ॐ अक्षय्यतेजसे नमः॥ ॐ सूर्याय नमः ॥ ॐ विश्वमूर्तये नमः॥
आदित्यं च शिवं विंद्याच्छिवमादित्यरूपिणम् ॥ उभयोरंतरं
नास्ति आदित्यस्य शिवस्य च ॥ १६ ॥ एतदिच्छाम्यहं श्रोतुं
पुरुषो वै दिवाकरः ॥ उदये ब्रह्मणो रूपं मध्याह्ने तु महेश्वरः
॥ १७ ॥ अस्तमाने स्वयं विष्णुस्त्रिमूर्तिश्च दिवाकरः ॥ नमो
भगवते तुभ्यं विष्णवे प्रभविष्णवे ॥ १८ ॥ ममेदमर्घ्यं प्रतिगृह्ण
देव देवाधिदेवाय नमो नमस्ते ॥ श्रीसूर्याय सांगाय सपरि-
वाराय श्रीसूर्यनारायणायेदमर्घ्यं ॥ १९ ॥ हिमघ्नाय तमोघ्नाय
रक्षोघ्नाय च ते नमः ॥ कृतघ्नघ्नाय सत्याय तस्मै सूर्यात्मने नमः
॥ २० ॥ जयो जयश्च विजयो जितप्राणो जितश्रमः ॥ मनोजवो

जितक्रोधो वाजिनः सप्त कीर्तिताः ॥२१॥ हरितहयरथं दिवाकरं कनकमयांबुजरेणुपिंजरम् ॥ प्रतिदिनमुदये नवं नवं शरणमुपैमि हिरण्यरेतसम् ॥ २२ ॥ न च व्यालाः प्रबाधंते न व्याधिभ्यो भयं भवेत् ॥ न नागेभ्यो भयं चैव न च भूतभयं क्वचित् ॥ २३ ॥ अग्निशत्रुभयं नास्ति पार्थिवेभ्यस्तथैव च ॥ दुर्गतिं तरते घोरां प्रजां च लभते पशून् ॥ २४ ॥ सिद्धिकामो लभेत्सिद्धिं कन्याकामस्तु कन्यकाम् ॥ एतत्पठेत्स कौंतेय भक्तियुक्तेन चेतसा ॥ २५ ॥ अश्वमेधसहस्रस्य वाजपेयशतस्य च ॥ कन्याकोटिसहस्रस्य दत्तस्य फलमाप्नुयात् ॥ २६ ॥ इदमादित्यहृदयं योऽधीते सततं नरः ॥ सर्वपापविशुद्धात्मा सूर्यलोके महीयते ॥ २७ ॥ नास्त्यादित्यसमो देवो नास्त्यादित्यसमा गतिः ॥ प्रत्यक्षो भगवान् विष्णुर्येन विश्वं प्रतिष्ठितम् ॥२८॥

नवतिर्योजनं लक्षं सहस्राणि शतानि च ॥ यावद्द्वीपप्रमाणेन तावच्चरति भास्करः ॥ २९ ॥ गवां शतसहस्रस्य सम्यग् दत्तस्य यत्फलम् ॥ यत्फलं लभते विद्वान् शांतात्मा स्तौति यो रविम् ॥ १३० ॥ योऽधीते सूर्यहृदयं स फलं सकलं लभेत् ॥ अष्टानां ब्राह्मणानां च लेखयित्वा समर्पयेत् ॥ ३१ ॥ ब्रह्मलोकऋषीणां च जायते मानुषोपि वा ॥ जातिस्मरत्वमाप्नोति शुद्धात्मा नात्र संशयः ॥ ३२ ॥ अजाय लोकत्रयपावनाय भूतात्मने गोपतये वृषाय ॥ सूर्याय सर्वप्रलयांतकाय नमो महाकारुणिकोत्तमाय ॥ ३३ ॥ विवस्वते ज्ञानभृदंतरात्मने जगत्प्रदीपाय जगद्धितैषिणे ॥ स्वयंभुवे दीप्तसहस्रचक्षुषे सुरोत्तमायामिततेजसे नमः ॥ ३४ ॥ सुरैरनेकैः परिसेविताय हिरण्यगर्भाय हिरण्मयाय ॥ महात्मने मोक्षप्रदाय नित्यं नमोऽस्तु ते वासरकारणाय ॥ ३५ ॥

आदित्यश्चार्चितो देव आदित्यः परमं पदम् ॥ आदित्यो मातृकाभूत आदित्यो वाङ्मयो जगत् ॥ ३६ ॥ आदित्यं पश्यते भक्त्या मां पश्यति ध्रुवं नरः ॥ नादित्यं पश्यते भक्त्या न स पश्यति मां नरः ॥ ३७ ॥ त्रिगुणं च त्रितत्त्वं च त्रयो देवास्त्रयोऽग्नयः ॥ त्रयाणां च त्रिमूर्तिस्त्वं तुरीयस्त्वं नमोस्तु ते ॥३८॥ नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ॥ त्रयीमयाय त्रिगुणात्मधारिणे विरिंचिनारायणशंकरात्मने ॥ ३९ ॥ यस्योदयेनेह जगत्प्रबुध्यते प्रवर्तते चाखिलकर्मसिद्धये ॥ ब्रह्मेंद्रनारायणरुद्रवंदितः स नः सदा यच्छतु मंगलं रविः ॥१४०॥ नमोऽस्तु सूर्याय सहस्ररश्मये सहस्रशाखान्वितसंभवात्मने ॥ सहस्रयोगोद्भवभावभागिने सहस्रसंख्यायुगधारिणे नमः ॥४१॥ यन्मण्डलं दीप्तिकरं विशालं रत्नप्रभं तीव्रमनादिरूपम् ॥ दारि-